ॐ श्रीगणेशाय नमः ॥ अथपञ्चकशान्तिः ॥ तत्रधनिष्ठोत्तरार्धमारभ्यरेवत्यन्तनक्षत्रेषूत्क्रान्त
जीवितस्यावश्यकदाहकरणे पञ्चकुशमयान् पुत्तलकान्विधाय प्रेतवाहप्रेतशवप्रेतपप्रेतभूमिप
प्रेतहर्तृनामभिर्यथाक्रमंतानभिमन्त्र्य प्रेतशिरःस्थाने प्रथमं १ दक्षिणकुक्षौ द्वितीयं २ वामकुक्षौ
तृतीयं ३ नाभौ चतुर्थं ४ पादद्वयमध्ये पञ्चमं ५ च निधाय संस्कृताग्नौतत्तन्नाम्नाऽऽहुतिपञ्चकं
दत्त्वाऽन्यथानैवदाहंकुर्यात् ॥ ततः कृतदाहःपुत्रादिर्नद्यादितीर्थंगत्वास्नात्वापूर्वंप्रेतवाहस्तृप्यता
मित्यादिक्रमेणतेभ्यः सतिलजलाञ्जलीन्पञ्चदद्यात्॥ ततःसूतकान्तेतत्तन्नक्षत्रेवाविविक्तेनदीतीरे
उद्यानादौ वा गत्वा पञ्चब्राह्मणानाचार्यषष्ठान्कुलीनान्विजितेन्द्रियान्वेदाभ्यासनिरतान् जपादि
संपन्नांस्तत्रसहैवनयेत् ॥ तत्रोपलिप्तायांभूमौब्राह्मणकरणकस्वस्तिवाचनानन्तरंगणेशादिपूजनमा
रभेत् ॥ तत्रसंकल्पः ॥ ॐ अद्येत्यादिअमुकगोत्रस्यामुकशर्मणो धनिष्ठादिपञ्चनक्षत्रान्तर्गता
मुकनक्षत्राधिकरणकप्राणवियोगोत्तरकालिकाग्निकरणकशरीरसंस्कारजायमानतदधोगत्यनन्त

रतत्संम्बंधिपुत्रादिजनाधिकरणकाशुभफलनिवृत्त्युत्तरतदीयसद्गतितत्संम्बंधिमनुष्याधिकरण
कशुभफलप्राप्तिकामनया नक्षत्रपञ्चकाधिष्ठातृप्रेतवाहादिपूजनतदुपयुक्तचतुर्दशयमपूजादिरू
पांपञ्चकशान्तिमहं करिष्ये ॥ तन्निर्विघ्नपरिसमाप्तिसिद्ध्यर्थंगणेशादीन्यथालब्धोपचारैश्चाहं
यजे ॥ गणेशादीन्संपूज्य ततोदक्षिणादिशिप्रक्लृप्तचतुष्कोणपञ्चकेप्रेतवाहादीन्पञ्चपूजयेत् ॥
तत्रक्रमः ॥ प्रथमचतुष्कोणे ॐ धनिष्ठानक्षत्राधिष्ठातः प्रेतवाहइहागच्छेत्यावाह्य पाद्यादिभिः
संपूज्यप्रार्थयेत् ॥ अधिष्ठातर्धनिष्ठायाःप्रेतवाहनमोस्तुते ॥ मृतस्यास्यप्रसादात्तेसद्गतिःस्याच्छु
भंचमे ॥ १ ॥ एवमेवतदुत्तरचतुष्कोणकेप्रेतशवमावाह्यसंपूज्यप्रार्थयेत् ॥ अधिष्ठातःशतर्क्षस्य
नमःप्रेतशवास्तुते ॥ पूजांमयाकृतांभक्त्यागृहीत्वासफलंकुरु ॥ २ ॥ एवमेवतृतीये प्रेतपमावा
ह्यसंपूज्यप्रार्थयेत् ॐ पूर्वाभाद्रपदाधीशनमस्तेप्रेतपप्रभो ॥ मृतस्यसद्गतिंकृत्वामह्यंदेहिशुभंफ
लम् ॥ ३ ॥ तदुत्तरेप्रेतभूमिपमावाह्यसंपूज्यप्रार्थयेत् ॥ प्रेतभूमिपतेतुभ्यंनमोस्तूत्तरभाद्रप ॥

पूजयावरदोभूत्वा मृतस्यकुरुसद्गतिम् ॥ ४ ॥ अवशिष्टेपञ्चमेप्रेतहर्तारमावाह्यसंपूज्यप्रा
र्थयेत् ॥ नमस्तेरेवतीशानप्रेतहर्तर्मयाकृताम् ॥ पूजांगृहीत्वावरदोभवकुर्याश्चसद्गतिम् ॥ ५ ॥
ततश्च तद्दक्षिणदिशि प्रक्लृप्तचतुष्कोणचतुर्दशतये क्रमेण यमादिचतुर्दशनामभिर्यमादीन्पू
जयेत् ॥ तत्राक्षतान्गृहीत्वा ॐ यमायत्वेतिप्रतिष्ठांकृत्वा पृथक्पृथक्पूजयेत् ॥ तत्रप्रथमेच
तुष्कोणके ॐ भगवन्यमइहागच्छइहतिष्ठममपूजांगृहाणेत्यावाह्यपाद्यादिभिःपूजांकुर्यात् १
एवमेवापरत्रक्रमेण १ धर्मराजं २ मृत्युम् ३ अन्तकं ४ वैवस्वतं ५ कालं ६ सर्वभूतक्षयम् ७
उदुम्बरं ८ दध्नं ९ नीलं १० परमेष्ठिनं ११ वृकोदरं १२ चित्रं १३ चित्रगुप्तं १४ च पूजयेत्
ततःपूर्वदिशिव्रणच्छिद्ररहितं पञ्चरत्नसहितवस्त्रयुग्मवेष्टितं जलपूर्णकलशं संस्थाप्यतदुपरिता
म्रपात्रस्थितसुवर्णमूर्तिंसंस्थाप्यतत्ररुद्रपूजांकुर्यात् ॥ तत्रक्रमः ॥ अद्येत्यादिअमुकगोत्रनाम
वर्मणो धनिष्ठादिपञ्चनक्षत्रान्तर्गतामुकनक्षत्राधिकरणकप्राणवियोगोत्तरकालिकाग्निकरणकश

रीरसंस्कारजायमानतदधोगत्यनन्तरतत्संबन्धिपुत्रादिजनादिकरणकाशुभफलनिवृत्त्युत्तरतदी
यसद्गतितत्सांसर्गिकाणांशुभफलप्राप्तिकामः क्रियमाणपञ्चकशान्त्यङ्गत्वेनपूर्वस्यांदिशिपञ्चर
त्नसहितवस्त्रद्वयावेष्टितजलपूर्णतत्कलशोपरिताम्रपात्राधिकरणकस्वर्णमयमूर्तौ रुद्रपूजनमहंक
रिष्ये ॥ इतिसंकल्प्याक्षतान्गृहीत्वा ॐ एह्येहिभूतेश्वरनस्त्रिशूलकपालखट्वाङ्गधरेणसार्धम् ।
लोकेशभूतेश्वरयज्ञसिद्ध्यैगृहाणपूजांभगवन्नमस्ते ॥ इत्युक्त्वा ॐ भगवन्रुद्रएतत्कल
शोपरिअस्यांस्वर्णमूर्तौआगच्छइहतिष्ठममपूजांगृहाणेत्यावाह्याक्षतान्क्षिपेत् ॥ ॐ नमस्तेरु
द्रमन्यवइतिमन्त्रेणपाद्यादिभिःपूजयेत् ॥ ततोवरणसंभृतिमादाय ॥ अद्येत्याद्यारभ्यपञ्चकशा
न्त्यङ्गत्वेनेत्यन्तमुक्त्वा नमस्तेरुद्रमन्यवइत्यादिशतरुद्रियाध्यायपाठिनममुकगोत्रममुकशर्मा
णंब्राह्मणमियत्परिमितनमस्तेरुद्रमन्यवइतिमन्त्रेणरुद्रजपंकारयितुमेभिर्वरणद्रव्यैस्त्वामहंवृणे इ
तिवृणुयात्वृतोस्मीतिब्राह्मणवचनम् ॥ एवमेवदक्षिणस्यांदिशियममावाह्यपूजयेत् ॥ तत्रपूर्वव

त्संकल्पंकृत्वाआवाहनमन्त्रः ॥ एह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्ममूर्ते । शुभाशुभानन्द
शुचामधीशशिवायनः पाहिमखंनमस्ते ॥ ॐ भगवन्यमइत्यावाह्य ॐ यमायत्वामखायत्वासू
र्यस्यत्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्यंसा २ स्पृशेस्पाहिअर्चिरसिशोचिरसितपोसि ॥
इत्यनेनपाद्यादिभिः संपूज्य ॥ वरणसंभृतिमादाय ॐ अद्येत्याद्यारभ्यपञ्चकशान्त्यङ्गत्वेनेत्यं
न्तमुक्त्वाअपेताध्यायपाठिनंब्राह्मणंयमायत्वेतिमन्त्रेणजपंकारयितुमेभिर्वरणद्रव्यैस्त्वामहं वृणे
वृतोस्मीतिब्राह्मणःप्रतिवचनं दद्यात् । एवं पश्चिमदिशिपूर्ववत्संकल्प्यवरुणमावाह्यपूजयेत् तत्र
पूर्ववत्संकल्पंकृत्वाआवाहनमन्त्रः ॐ एह्येहियादोगणवारिधीनांगणेनपर्जन्यगणाप्सरोभिः ।
विद्याधरेन्द्रामरगीयमानपाहित्वमस्मान्भगवन्नमस्ते ॥ ॐ भगवन्वरुण० पूजनमन्त्रस्तु ॐ
वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऋतसदन्यसि वरुणस्यऋतसदनम
सिवरुणस्यऋतसदनमासीदेत्यनेनमन्त्रेणपाद्याद्युपचारैः पूजयेत् ॥ ॐ अद्येत्यादिकृणुष्वपाज

इत्यादिरक्षोघ्नमन्त्रपञ्चकपाठिनंवरुणस्योत्तम्भनमितिमन्त्रेणजपंकारयितुमेभिर्वरणद्रव्यैस्त्वाम
हंवृणे वृतोस्मीतिब्राह्मणः तथैवोत्तरस्यांदिशिइन्द्रमावाह्यपूजयेत् तत्र ॐ अद्येत्यादि० इन्द्रपूज
नंकरिष्येइतिसंकल्प्यअक्षतान्गृहीत्वा ॥ एह्येहिसर्वामरसिद्धसंघैरभिष्टुतोवज्रधरोमरेश ॥ संवी
ज्यमानोप्सरसांगणेनरक्षाध्वरंनोभगवन्नमस्ते ॥ ॐ भगवन्निन्द्र० इत्यावाह्य पूजनंच ॐ त्रातार
मिन्द्रमवितारमिन्द्र ꣳ हवेहवेसुहव ꣳ शूरमिन्द्रम् ॥ ह्वयामिशक्रंपुरुहूतमिन्द्र ꣳ स्वस्तिनोमघ
वाधात्विन्द्रः ॥ इत्यनेनपू० ॥ ॐ अद्येत्याद्युक्त्वा० आशुः शिशानइत्यारभ्यसप्तदशमन्त्राव
च्छिन्नाप्रतिरथसूक्तपाठिनं० त्रातारमिन्द्रमितिमन्त्रेणयथासंभवजपंकारयितुमेभिर्वरणद्रव्यैरहं
वृणे ॥ वृतोस्मी० ॥ तथामध्येत्र्यम्बकमावाह्यपूजयेत् ॥ तत्रअद्येत्याद्युक्त्वात्र्यम्बकंयजे ॥
अक्षतान्गृहीत्वाएह्येहिमृत्युंजयलोकनाथगौरीशभूतेश्वरविश्वमूर्ते ॥ युक्तः स्वकीयैः प्रमथैर्मखे
ऽस्मिन्पाहित्वमस्मान्भगवन्नमस्ते ॥ ॐ भगवन्त्र्यम्बक० इत्यावाह्यपूजनमन्त्रश्चत्र्यम्बकमि

ति ॥ वरणम् ॐ अद्येत्यादि० ऋचंवाचमित्यादिचतुर्विंशतिमन्त्रावच्छिन्नाध्यायपाठिनंत्र्यम्ब
केत्यनेनयथासंभवंजपंकारयितुमेभिर्वरणद्रव्यैरहंवृणे ॥ वृतोस्मी० । एवंपञ्चैवब्राह्मणायथोद्देशं
प्रयताजपंकुर्युः ॥ जपानन्तरमुपविष्टेषुचतेष्वाचार्योग्निस्थापनंकुर्यात् ॥ तत्रक्रमः ॥ हस्तमितां
भूमिं कुशैः परिसमुह्य तान्कुशानैशान्यां परित्यज्य गोमयोदकेनोपलिप्यस्फ्येनस्रुवेण वा प्राग
ग्रप्रादेशमात्रमुत्तरोत्तरक्रमेण त्रिरुल्लिख्य उल्लेखनक्रमेणानामिकाङ्गुष्ठाभ्यामुद्धृत्यजलेनाभ्युक्ष्य
कांस्येनाग्निमानीयस्वाभिमुखं निदध्यात् ॥ ततो वरणसंभृतिमादाय ॥ ओमद्येत्यादिकर्तव्य
पञ्चकशान्त्यङ्गत्वेन होमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मकर्तुममुकगोत्रममुकशर्माणंब्राह्मणमे
भिर्वरणद्रव्यैस्त्वामहंवृणे ॥ वृतोस्मीति प्रतिवचनानन्तरंयथाविहितं कर्म कुर्विति यजमानेनोक्ते
करवाणीति द्विजोवदेत् ॥ ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरिप्रागग्रान्कुशानास्तीर्य
अग्निं प्रदक्षिणीकृत्यास्मिन्कर्मणि त्वं मे ब्रह्मा भवेत्यभिधाय ओंभवानीतितेनोक्तेकल्पितास

नेउदङ्मुखमुपवेशयत् ॥ पृथूदकपात्रमग्नेरुत्तरतःप्रतिष्ठाप्य प्रणीतापात्रं पुरतःकृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्याग्नेरुत्तरतःकुशोपरि निदध्यात् ॥ ततःपरिस्तरणं बर्हिषश्चतुर्थभागमादायाग्नेयादीशानान्तं ब्रह्मणोग्निपर्यन्तंनैर्ऋत्याद्वायव्यान्तम् अग्नितः प्रणीता पर्यन्तंकुर्यात् ॥ततोऽग्नेरुत्तरतः पवित्रच्छेदनार्थंकुशाःपवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं प्रोक्षणीपात्रं आज्यस्थाली चरुस्थाली संमार्जनार्थाः पञ्चकुशाः उपयमनार्थं वेणीरूपकुशत्रयंस मिधस्तिस्रः स्रुवः आज्यं पूर्णपात्रंचर्वर्थंमामतण्डुलाः ॥ ततःपवित्रच्छेदनकुशैः पवित्रेछित्त्वा सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधायानामिकाङ्गुष्ठाभ्यां द्वाभ्यां पवित्रे गृहीत्वा त्रि रुत्पूय प्रोक्षणीपात्रं वामहस्ते कृत्वा दक्षिणहस्तानामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वात्रिरुद्दिङ्गनं ततः प्रणीतोदकेन प्रोक्षणीपात्रमापूर्यप्रोक्षणीजलेन यथासादितवस्तुसेचनं ततोऽग्नेरुत्तरतः प्रणीता दक्षिणदिशि प्रोक्षणीपात्रंनिदध्यात् आज्यस्थाल्यामाज्यनिर्वापःप्रणीताजलं किञ्चिच्चरौ

निधाय प्रणीताजलेनैवतण्डुलान्प्रक्षाल्यचरौक्षिपेत् स्वयं चरुं गृहीत्वा ब्रह्मणाचाज्यं वह्नावुत्तरत श्चरुंदक्षिणत आज्यंनिदध्यात् ॥ ततो ज्वलत्तृणादिकमादाय हविर्द्वयोपरि भ्रामयित्वा वह्नौ तत्प्र क्षेपः ॥ शृतेचरौ वारत्रयं स्रुवप्रतपनं संमार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवंसंमृज्य प्रणी तोदकेनाभ्युक्ष्य पुनस्तथैव प्रताप्यस्रुवं दक्षिणतो निदध्यात् ॥ ततो वारत्रयं प्रोक्षणीवदाज्य स्योत्पवनम् ॥ तत उपयमनकुशान्वामहस्ते कृत्वोत्थाय प्रजापतिं मनसाध्यात्वा तूष्णीं घृता क्तास्तिस्रः समिधोऽग्नौ प्रक्षिपेत् ॥ ततउपविश्य प्रोक्षणीजलेनाग्निं प्रदक्षिणं पर्युक्ष्य प्रणीता पात्रे पवित्रे निधाय पातितदक्षिणजानुर्ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौजुहुयात् ॥ तत्राघारादा रभ्य द्वादशाहुतिषुतत्तदाहुत्यनन्तरं स्रुवावस्थिताज्यस्यप्रोक्षणीपात्रे प्रक्षेपः ॥ ततो होमः॥ॐ प्रजापतये स्वाहा इदं प्रजापतये नमम ॥ इति मनसा । ॐ इन्द्रायस्वाहा इदमिन्द्राय० इत्या घारौ ॥ ॐ अग्नयेस्वाहा इदमग्नये० ॥ ॐ सोमायस्वाहा इदंसोमाय ॥ १ ॥ इत्याज्यभागौ ॥

ॐ भूः स्वाहा इदमग्नये० ॥ ॐ भुवःस्वाहा इदंवायवे० ॥ ॐ स्वःस्वाहा इदंसूर्याय० ॥ एता
महाव्याहृतयः ॥ ॐ त्वन्नोअग्नेव्वरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः
शोशुचानोव्विश्वाद्वेषाᳬसिप्रमुमुग्ध्यस्मत्स्वाहा इदमग्नीवरुणाभ्याम्० ॥ ॐ सत्वन्नोअग्ने व्वमो
भवोतीनेदिष्ठोऽअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणᳬरराणोव्वीहिमृडीकᳬसुहवोनएधिस्वा
हा ॥ इदमग्नीवरुणाभ्याम्० ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्वमयाऽअसि ॥ अया-
नोयज्ञंवहास्ययानोधेहिभेषजᳬस्वाहा ॥ इदमग्नये० ॥ ॐ येतेशतंवरुणयेसहस्रंयज्ञियाः पाशा
विततामहान्तः॥तेभिर्न्नोअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्काःस्वाहा॥ इदं वरुणाय सवि
त्रे विष्णवे विश्वेभ्योदेवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च०॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमं विमध्य
मᳬश्रथाय॥ अथाव्वयमादित्यव्रतेतवानागसोऽअदितयेस्यामस्वाहा॥ इदंवरुणाय० ॥८॥ ॐ
आकृष्णेन० इदंसूर्याय० ॥ ॐ इमंदेवअसपत्नाᳬसुवध्वं महतेक्षत्रायमहतेज्यैष्ठ्यायमहतेजा

नराज्यायेन्द्रस्ययेन्द्रियाय इममसुष्यपुत्रममुष्यैपुत्रमस्यैविशएषवोमीराजासोमोस्माकंब्राह्मणा
नाᳬराजास्वाहा इदंचन्द्राय० ॥ ॐ अग्निर्मूर्धा० इदंभौमाय० ॥ ॐ उद्बुध्यस्व० इदं बुधाय० ॥
ॐ बृहस्पते० इदंगुरवे ० ॥ ॐ अन्नात्० इदंशुक्राय० ॥ ॐ शन्नो० इदंशनैश्चराय० ॥ ॐ
कयान० इदंराहवे० ॥ ॐ केतुं० इदंकेतवे० ॥ ततोघृतेनैव ॥ ॐ यमायत्वामखायत्वासूर्यस्य
त्वातपसेदेवस्त्वासवितामध्वानक्तुपृथिव्याःसᳬस्पृशस्पाहिअर्चिरसिशोचिरसितपोसि अनेनम
न्त्रेणषोडशाहुतीर्जुहुयात् ॥ ॐ शन्नोदेवी० स्वाहा० ॥ ॐ आपोहि० ॥ ॐ योवः ० ॥ ॐ
तस्मा० ॥ ॐ तत्सवितुर्व० ॥ द्यौःशान्तिरन्तरिक्षᳬशान्तिःपृथिवीशान्तिरापः शान्तिरोषधयः
शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वᳬशान्तिः शान्तिरेवशान्तिः सामा
शान्तिरेधिस्वाहा ॥ ॐ युञ्जन्तिब्रध्नमरुषंचरन्तपरितस्थुषः रोचन्तेरोचनादिविस्वाहा ॥ १ ॥
ॐ युञ्जन्त्यस्यकाम्याहरीविपक्षसारथे ॥ शोणाधृष्णूनृवाहसा० ॥ २ ॥ ॐ यद्वातो अपोअग

नीगन्प्रियामिन्द्रस्यतन्वम् ॥ एतᳪस्तोतरनेनपथापुनरश्वमावर्तयासिनः० ॥ ३ ॥ ॐ वसव-
स्त्वांजन्तुगायत्रेणच्छन्दसांगिरस्वद्रुद्रास्त्वांजन्तुत्रैष्टुभेनच्छन्दसादित्यास्त्वां जन्तुजागतेनच्छ
न्दसा ॥ भूर्भुवः स्वर्लाजी ३ न्छाची ३ न्यव्येगव्यएतदन्नमत्तदेवाऽएतदन्नमद्धिप्रजापते०॥ ४॥
कः स्विदेकाकीचरतिकउस्विज्जायतेपुनः ॥ किᳪस्विद्धिमस्यभेषजंकिंवावपनंमहत्० ॥ ५ ॥
सूर्यएकाकीचरतिचन्द्रमाजायतेपुनः ॥ अग्निर्हिमस्यभषेजं भूमिरावपनंमहत्० ॥ ६ ॥ कास्वि
दासीत्पूर्वचित्तिः किᳪस्विदासीद्बृहद्वयः ॥ कास्विदासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला०
॥ ७ ॥ द्यौरासीत्पूर्वचित्तिरश्वआसीद्बृहद्वयः ॥ अविरासीत्पिलिप्पिलारात्रिरासीत्पिशङ्गिला०
॥ ८ ॥ इत्यष्टभिर्मन्त्रैर्जुहुयात् ॥ ततोयस्मिन्नक्षत्रेतस्यमरणंजातंतन्नक्षत्रस्वामिमन्त्रेणअष्टोत्त
रशताहुतीर्जुहुयात् ॥ तेचैवंपञ्चैवमन्त्राः ॥ धनिष्ठायाः ॥ ॐ व्वसोः पवित्रमसिशतधारंव्वसोः
पवित्रमसिसहस्रधारंदेवस्त्वासवितापुनातुव्वसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः० ॥ शतभि

षायाः ॥ ॐ वरुणस्योत्तम्भनमसिव्वरुणस्यस्कम्भसर्जनीस्थोव्वरुणस्यऋतसदन्यसिव्वरुण स्यऋतसदनमसिव्वरुणस्यऋतसदनमासीद० ॥ पूर्वाभाद्रपदायाः ॥ ॐ उतनोहिर्बुध्न्यः शृणो त्वजएकपात्पृथिवीसमुद्रः ॥ विश्वेदेवाऋतावृधोहुवाना स्तुतामन्त्राः कविशस्ताअवन्तु० ॥ ३ ॥ उत्तराभाद्रपदायाः ॥ ॐ शिवोनामासिस्वधितिस्तेपितानमस्ते अस्तुमामाहिꣳसीः ॥ निवर्तया म्यायुषेन्नाद्यायप्रजननायरायस्पोषाय सुप्रजास्त्वायसुवीर्याय० ॥ ४ ॥ रेवत्याः ॥ ॐ पूषंतवव्रते वयंनरिष्येमकदाचन ॥ स्तोतारस्तइहमस्मि० ॥ ५ ॥ ततः पश्चापिब्राह्मणाः कृतमन्त्रजाप्य दशांशप्रमितं तस्मिन्नेवसंस्कृतेग्नौसंकल्प्यघृतेनैवजुहुयुः ॥ ततआचार्यः ॥ ॐ अग्नयेस्विष्ट कृते स्वाहा इदमग्नयेस्विष्टकृते० इति जुहुयात् ततः संस्रवप्राशनम् आचमनंच ततः पूर्णपात्र दानम् ॥ ॐ अद्येत्यद्युक्तापञ्चकशान्त्यङ्गभूतहोमकर्मणिकृताकृतावेक्षणरूपब्रह्मकर्मप्रति ष्ठार्थमिदंपूर्णपात्रं प्रजापतिदैवतममुकगोत्रायामुकशर्मणेब्राह्मणायब्रह्मणे दक्षिणांतुभ्यमहंसंप्रददे

इतिदक्षिणांदद्यात् ॥ ॐ स्वस्तीतिप्रतिवचनम् ॥ ततोब्रह्मग्रन्थिविमोकः ॥ ॐ सुमित्रियान
आपओषधयः सन्त्वितिपवित्राभ्यांशिरः संमृज्य ॥ ॐ दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियंच
वयंद्विष्मः ॥ इत्यैशान्यांप्रणीतान्युब्जीकरणम् ॥ ततआस्तरणक्रमेणवर्हिरुत्थाप्यघृतेनाभि
घार्यहस्तेनैवजुहुयात् ॥ तत्रक्रमः ॥ ॐ देवागातुविदोगातुंवित्त्वागातुमितमनसस्पतइमंदेवयज्ञ
स्वाहाव्वातेधाः स्वाहा ॥ ततआचार्योयजमानहस्तस्पृष्टेनघृतपुष्पफलपूर्णेनस्रुवेणपूर्णाहुतिंजु
हुयात् ॥ ॐ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतआजातमग्निम् ॥ कविꣳ सम्राजमतिथिंज
नानामासन्नापात्रंजनयन्तदेवाःस्वाहा ॥ ततःस्रुवेणभस्मानीयाचार्यः दक्षिणानामिकाङ्गुष्ठाभ्यां
गृहीतभस्मना ॥ ॐ त्र्यायुषंजमदग्नेरितिललाटे ॥ ॐ कश्यपस्यत्र्यायुषमितिग्रीवायाम् ॥ ॐ
यद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले ॥ ॐ तन्नोअस्तुत्र्यायुषमितिहृदि ॥ अनेनैवक्रमेणयजमा
नादावपित्र्यायुषंकुर्यात् ॥ तत्रतन्नोइत्यत्रतत्तेइतिवक्तव्यम् ॥ ततोब्राह्मणाअपिनिजमन्त्रैर्हवन

दशांशतर्पणंकुर्युः ॥ ततःस्वस्वकलशाज्जलमानीयस्वस्वमन्त्रैस्तर्पणदशांशंकुशत्रयेणयजमानं मार्जयेयुः ॥ आचार्यश्चप्रथमकलशात्कुशत्रयेणजलमादायवक्ष्यमाणमन्त्रैर्यजमानमभिषिञ्चति प्रतिमन्त्रान्ते ॥ तेचमन्त्राः ॥ ॐ सुमित्रियानआपओषधयःसन्तु ॥ १ ॥ ॐ स्योनापृथिविनो भवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ २ ॥ ॐ भगप्रणेतर्भगसत्यराधोभगेमांधियमुद वाददन्नः ॥ भगप्रनोजनयगोभिरश्वैर्भगप्रनृभिर्नृवन्तःस्याम ॥ ३ ॥ ॐ इदमापः प्रवहतावद्यंच मलंचयत् ॥यच्चाभिदुद्रोहानृतंयच्चशेपेअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु॥४॥ आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहियज्ञम् ॥ वायोअस्मिन्त्सवनेमादयस्वयूयंपातस्वस्तिभिः सदानः ॥५॥ ॐ अभित्यंदेवꣳ सवितारमोण्योःकविक्रतुमर्चामिसत्यसवꣳ रत्नधामभिप्रियंमतिंकविम् ॥ ऊर्ध्वायस्यामतिर्भाआदिद्युतत्सवीमनि हिरण्यपाणिरमिमीतसुक्रतुःकृपास्वःप्रजाभ्यस्त्वाप्रजास्त्वानुप्राणन्तुप्रजास्त्वमनुप्राणिहि ॥६॥ ॐ सत्येपयोसि०॥७॥

ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतः सुरुचोव्वेनआवः॥सबुध्न्याउपमाअस्यविष्ठाःसतश्चयोनिम
सतश्चविवः ॥ ८ ॥ ॐ वयर्ठ॰सोम० ॥ ९ ॥ ॐ आपोहिष्ठाः ॥ १० ॥ ॐ योवःशि० ॥ ११ ॥
ॐ तस्मा० ॥ १२ ॥ ॐ त्रातार० ॥ १३ ॥ ॐ वरुणस्यो० ॥ १४ ॥ ॐ कयानश्चित्र०॥१५॥
ॐ आपोअद्यान्वचारिषर्ठ॰रसेनसमसृक्ष्महि ॥ पयस्वानग्नआगमन्तंमासर्ठ॰सृजवर्च्चसाप्रजयाच
धनेनच ॥ १६ ॥ ॐ एधोस्येधिषीमहिसमिदसितेजोसितेजोमयिधेहि ॥ समाववर्तिपृथिवीस
मुषाःसमुसूर्यःसमुविश्वमिदंजगत् वैश्वानरज्ज्योतिर्भूयासंविभून्कामान्व्यश्नवैभूःस्वाहा ॥ १७ ॥
ॐ अभ्यादधामिसमिधमग्नेव्रतपतेत्वयिव्रतंचश्रद्धांचोपैमीन्धेत्वादीक्षितोऽअहम् ॥ १८ ॥ ॐ
यत्रब्रह्मचक्षत्रंचसम्यंचौचरतःसह॥ तल्लोकंपुण्यंप्रज्ञेषंयत्रदेवाःसहाग्निना ॥ १९ ॥ ॐ आप्या
यस्वसमे० ॥ २० ॥ ॐ सन्तेपयार्ठ॰सिसमुयन्तुवाजाः संवृष्ण्यान्यभिमातिषाहः ॥ आप्याय
मानोअमृतायसोमदिविश्रवार्ठ॰स्युत्तमानिधिष्व ॥ २१ ॥ ॐ आप्यायस्वमदिंतमसोमविश्वेभि

रꣳशुभिः ॥ भवानःसप्रथस्तमःसखावृधे ॥ २२ ॥ ॐ आतेवत्सोमनोयमत्परमाच्चित्सधस्थात् ॥ अग्नेत्वंकामयागिरा ॥ २४ ॥ ॐ तुभ्यंताअङ्गिरस्तमविश्वासुक्षितयःपृथक् ॥ अग्नेकामाययेमिरे ॥ २३ ॥ ॐ अग्निःप्रियेषुधामसुकामोभूतस्यभव्यस्य ॥ सम्राडेकोविराजति ॥ २५ ॥ ॐ देवस्यत्वासवि० अश्विनोर्भैषज्येनतेजसेब्रह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्यायान्नाद्यायभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि ॥ २६ ॥ कोसिकतमोसिकस्मैत्वाकायत्वा सुश्लोकसुमङ्गलसत्यराजन् ॥ २७ ॥ ॐ शिरोमेश्रीर्यशोमुखंत्विषिःकेशाश्चश्मश्रूणिराजामेप्राणोअमृतꣳसम्राट्चक्षुर्विराट्श्रोत्रम् ॥ २८ ॥ ॐ पयःपृथिव्यां० ॥ २९ ॥ ॐ इमम्माहिꣳसीर्द्विपादंपशुꣳसहस्राक्षोमेधायचीयमानः मयुंपशुंमेधमग्नेजुषस्वतेनचिन्वानस्तन्वोनिषीद मयुंतेशुगृच्छतुयंद्विष्मस्तंतेशुगृच्छतु ॥ ३० ॥ इमंमाहिꣳसीरेकशफंपशुंकनिक्रदंवाजिनंवाजिनेषु गौरमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद गौरंतेशुगृच्छतुयंद्विष्मस्तंते

शुगृच्छतु ॥ ३१ ॥ ॐ इमᳬसाहस्रᳬशतधारमुत्संव्यच्यमानᳬसरिरस्यमध्ये ॥ घृतंदुहानामदि
तिंजनायाग्नेमाहिᳬसीःपरमेव्योमन् ॥ गवयमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥
गवयन्तेशुगृच्छतुयंद्विष्मस्तंतेशुगृच्छतु ॥ ३२ ॥ इमसूर्णाग्रुम्वरुणस्यनाभिंत्वचम्पशूनांद्विप
दांचतुष्पदाम् ॥ त्वष्टुःप्रजानाम्प्रथमञ्जनित्रमग्नेमाहिᳬसीःपरमेव्योमन् ॥ उष्ट्रमारण्यमनुतेदि
शामितेनचिन्वानस्तन्वोनिषीद ॥ उष्ट्रन्तेशुगृच्छतुयंद्विष्मस्तन्तेशुगृच्छतु ॥ ३३ ॥ ॐ सर्वे
षांवाएषवेदानाᳬरसोयत्सामसर्वेषामेवैनमेतद्वेदानाᳬरसेनाभिषिञ्चति ॥३४॥यद्देवकल्पाजुहोति
प्राणावैकल्पाअमृतमुवैप्राणाअमृतेनैवैनमेतदभिषिञ्चति ॥ ३५ ॥ देवस्यत्वास० ॥ ३६ ॥ पुनन्तु
मादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ ३७ ॥ इतिवैदिकम
न्त्रैरभिषिच्यपौराणिकैरप्यभिषिञ्चेत् ॥ सुरास्त्वामभिषिञ्चन्तुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोज
गन्नाथस्तथासंकर्षणोविभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्चभवन्तुविजयायते ॥ आखण्डलोग्निर्भगवा

न्यमोवैनिर्ऋतिस्तथा ॥ २ ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदि
क्पालाःपान्तुतेसदा ॥ ३ ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुः
शान्तिस्तुष्टिःकान्तिश्चमातरः ॥ ४ ॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यःसमागताः ॥ आदित्य
श्चन्द्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिञ्चन्तुराहुःकेतुश्चतर्पिताः ॥ देवदानवगन्ध
र्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसां
गणाः ॥ ५ ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवा
श्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिञ्चतुसर्वकामार्थसिद्धये ॥ ६ ॥
इत्यभिषिञ्चेत् ॥ आमान्नदानसंकल्पः ॥ ॐ अद्येत्यादिपूर्ववदुक्त्वाकृतैतत्पञ्चकशान्त्यङ्गत्वेन
पायसाद्यामान्नंयथासोपस्करंयथापरिमितब्राह्मणभोजनसंपत्तिपर्याप्तं दक्षिणासहितं नानानामगो
त्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजेनमम ॥ ततोजपदक्षिणांदद्यात् ॥ वाक्यंचपूर्ववत् ॥ ॐ अद्ये-

त्याद्युक्त्वा ब्राह्मणद्वाराकारितपृथक्पृथगमुकसंख्याकरौद्रयाम्यवारुणैन्द्रत्रैयम्बकमन्त्रजपसाङ्ग
तासिद्धयेइदंदक्षिणाद्रव्यंयथानामगोत्रेभ्यःपञ्चब्राह्मणेभ्योविभज्यदातुमहमुत्सृजे ॥ ततःआचा
र्यायगोदानंतन्निष्क्रयंसुवर्णंवादद्यात् ॥ तिलस्वर्णवस्त्राणिचब्राह्मणायदद्यात् ॥ सप्तधान्यंचनद्या
दौक्षिपेत् ततआज्यावलोकनंततः प्रणिपत्यगणेशादीन्विसर्जयेत् ततः कृतस्नानआचार्यादि
भिः स्वस्तिवाचयेत् स्थावरंशैवलिङ्गंचपूजेयत्गोभ्योजलमाह्निकंचदद्यात् तत्रप्रार्थना यादेवी
सर्वभूतेषुयाचविष्णुपदेस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ १ ॥ गावोमेअग्रतःसन्तु
गावोमेसन्तुपृष्ठतः ॥ गावोमेहृदयेसन्तुगवांमध्येवसाम्यहम् ॥२॥ ततोगृहमागत्यब्राह्मणान्भोज
यित्वादीनानाथेभ्यश्चभोजनंदत्त्वावाग्यतः स्वयंभुञ्जीतेति भद्रम् ॥ अथसामग्री ॥ रोली,मौली,
केशर,पुष्प, बतासे,अक्षत,धूप,दीप,तांबूल, गुड, कच्चादुग्ध,आटा,पंचरंग, सुपारी ७, घट ५,
स्वर्णमूर्ति ५,तष्टी ५, उपर्णे ६, दरिया ६, नरेल ५, टके, रेत,कुशा, स्रुवा,पत्र,पलाशसमिधा,

गडवी, पूर्णपात्र, घृत, तेल, सप्तधान्य, सुवर्ण, गौ, छायापात्र, कटोरिया, सुवर्ण, सालू, पंचरत्न ॥ इति सामग्रीसमाप्ता ॥ ॐ कृणुष्वपाजः प्रसितिंनपृथ्वींयाहिराजेवामवा २ इभेन ॥ तृष्वीमनु प्रसितिन्द्रूणानोस्तासिविध्यरक्षसस्तपिष्ठैः ॥ १॥ तवभ्रमासआशुयापतन्त्यनुस्पृशधृषताशोशु चानः ॥ तपू २ ष्यंग्नेजुह्वापतंगानसंदितोविसृजविष्वगुल्का ॥ २ ॥ प्रतिस्पशोविसृजतूर्णितमो भवापायुर्विंशोअस्याअदब्धः ॥ योनोदूरअघश २ सोयोअन्त्यग्नेमाकिष्टेव्यथिरादधर्षीत् ॥ ३ ॥ उदग्नेतिष्ठप्रत्यातनुष्वन्यमित्राँ ३ ओषतात्तिग्महेते ॥ योनोअराति २ समिधानचक्रेनीचातं धक्ष्यतसन्नशुष्कम् ॥ ४ ॥ ऊर्ध्वोभवप्रतिविध्याध्यस्मदाविष्कृणुष्वदैव्यान्यग्ने ॥ अवस्थिरात नुहियातुजूनांजामिमजामिंप्रमृणीहिशत्रून् ॥ अग्नेष्ट्वातेजसासादयामि ॥ ५ ॥ इतिराक्षोघ्नम न्त्राः ॥ इतिपञ्चकशान्तिः ॥ ॐ अपेतोयन्तुपणयोसुम्नादेवपीयवः ॥ अस्यलोकः सुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मै ॥ १ ॥ सवितातेशरीरेभ्यः पृथिव्यांल्लोकमि

च्छतु ॥ तस्मैयुज्यन्तामुस्स्रियाः ॥ २ ॥ वायुः पुनातुसवितापुनात्वग्नेर्भ्राजसासूर्य्यस्यवर्चसा
विमुच्यन्तामुस्त्रियाः ॥ ३ ॥ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथय
त्सनवथपूरुषम् ॥ ४ ॥ सवितातेशरीराणिमातुरुपस्थआवपतु ॥ तस्मैपृथ्वीशंभव ॥ ५ ॥
प्रजापतौत्वादेवतायामुपादकेलोकेनिदधाम्यसौ ॥ अपनः शोशुचदघम् ॥ ६ ॥ परंमृत्योअनु
परेहिन्थांयस्तेअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानः प्रजा ᳪ रीरिषोमोतवी
रान् ॥ ७ ॥ शंवातः श ᳪ हितेघृणिः शन्तेभवन्त्विष्टकाः ॥ शन्तेभवन्त्वग्नयः ॥ पार्थिवासो
मात्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्तेदिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तुसिन्धवः ॥
अन्तरिक्ष ᳪ शिवन्तुभ्यङ्कल्पन्तान्तेदिशः सर्वाः ॥ ९ ॥ अश्मन्वतीरीयतेसᳪरभध्वमुत्तिष्ठ
तप्रतरतासखायः ॥ अत्राजिहीमोशिवायेअसञ्छिवान्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघ
मपकिल्बिषमपकृत्त्यामपोरपः ॥ अपामार्गत्वमस्स्मदपदुष्वप्नᳪसुव ॥ ११ ॥ सुमित्रियान

आपओषधयः सन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चव्वयन्द्विष्मः ॥ १२ ॥ अनड्वाहम
न्वारभामहेसौरभेयर्ठस्वस्तये ॥ सनइन्द्रइवदेवेभ्योवह्निः सन्तारणोभव ॥ १३ ॥ उद्वयंतम
सस्परिस्स्वः पश्यन्तउत्तरम् ॥ देवंदेवत्रासूर्य्यमगन्मज्ज्योतिरुत्तमम् ॥ १४॥ इमञ्जीवेभ्यःपरि
धिन्दधामिमैषान्नुगादपरोऽअर्त्थमेतम् ॥ शतञ्जीवन्तुशरदः पुरूचीरंतम्मृत्युंदधताम्पर्वतेन ॥
॥ १५ ॥ अग्न्नआयूर्ठषिपवसआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥ १६ ॥ आयु
ष्मानग्नेहविषावृधानोघृतप्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वामधुचारुगव्यंपितेवपुत्रमभिरक्ष
तादिमान्स्वाहा ॥ १७ ॥ परीमेगामनेषतपर्य्यग्निमहृषत ॥ देवेष्वक्रतश्श्रवः कइमाँ २ आद
धर्षति ॥ १८ ॥ क्रव्यादमग्निम्प्रहिणोमिदूरंयमराज्यङ्गच्छतुरिप्रवाहः ॥ इहैवायमितरोजात
वेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ १९ ॥ वहव्वपाञ्जातवेदः पितृभ्योयत्रैनान्वेत्थनिहितान्परा
के ॥ मेदसः कुल्याउपैतान्स्रवन्तुसत्यायएषामाशिषः सन्नमन्तार्ठ २ स्वाहा ॥ २० ॥ स्योना

पृथिविनोभवानृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्प्रथाः ॥ अपनः शोशुचदघम् ॥ २१ ॥
अस्मात्त्वमधिजातोसित्वदयञ्जायताम्पुनः ॥ असौस्वर्गायलोकायस्वाहा ॥ २२ ॥ इतिसंहि
तायांपञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ इति धनिष्ठापञ्चकशान्तिः समाप्तिमगमत् ॥

इदं पुस्तकं श्रीकृष्णदासात्मज-गङ्गाविष्णुना स्वकीये " लक्ष्मीवेङ्कटेश्वर "
मुद्रणालये मुद्रयित्वा प्रकाशितम् । शके १८२७, संवत् १९६२.

पुस्तक मिलनेका ठिकाना-गंगाविष्णु श्रीकृष्णदास,
" लक्ष्मीवेंकटेश्वर " छापाखाना,
कल्याण-(मुंबई).

## विनयपत्रिका सटीक।

तुलसीदासकृत. इस अपूर्व और अद्भुत ग्रन्थपर महात्माओंने अनेक टीका किये हैं, जो कोई पुरुष सत उपदेष्टासे सम्यक् श्रवण करे अथवा आप स्वयं एकाग्र चित्तसे श्रमपूर्वक अभ्यास कर मनन करै तौ अवश्य परम तत्वको प्राप्त हो सक्ता है-परंतु श्रमाधीन वस्तुकी लाभ जो विना परिश्रमके प्राप्त हो जावे और उत्साहपूर्वक मन लगे तौ औरभी अतीवोत्तम है, इसीसे टीकाकारने पूर्व वर्णित महानुभावोंके टीका भूषणोंको इस ग्रन्थरूपी मूर्तिको प्रत्येक अवयवोंपर भूषितकर दिया अर्थान्तर सरल रीतिसे भाषामें पदच्छेदपूर्वक प्रतिशब्द टीका किया कि जिसके द्वारा विद्यानुरागी भक्तजन अनायास यथार्थ तत्वज्ञानी होकर निस्संदेह परमपदको प्राप्त हो जावेंगे पाठशालाके विद्यार्थियोंकोभी विद्योपार्जनके लिये अत्यंत सुलभ और लाभकारी होगा। ग्लेज की० २॥ रु०। रफ् की० २ रु०।

पुस्तक मिलनेका ठिकाना-
गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना;
कल्याण-मुंबई.

॥ इति धनिष्ठापञ्चकशान्तिः समाप्ता ॥